॥ तीर्थस्नानफलप्रदम् श्रीविष्णुस्तोत्रं नरसिंहपुराणे ॥

वागुवाच
स्तोत्रेणानेन विप्रेन्द्र स्तुहि नारायणं प्रभुम् ।
नान्यथा सर्वतीर्थानां फलं प्राप्स्यसि सुव्रत ॥ १॥

मार्कण्डेय उवाच
तदेवाख्याहि भगवन् स्तोत्रं तीर्थफलप्रदम् ।
येन जप्तेन सकलं तीर्थस्नानफलं लभेत् ॥ २॥

वागुवाच
जय जय देवदेव जय माधव केशव ।
जय पद्मपलाशाक्ष जय गोविन्द गोपते ॥ ३॥

जय जय पद्मनाभ जय वैकुण्ठ वामन ।
जय पद्म हृषीकेश जय दामोदराच्युत ॥ ४॥

जय पद्मेश्वरानन्त जय लोकगुरो जय ।
जय शङ्खगदापाणे जय भूधरसूकर ॥ ५॥

जय यज्ञेश वाराह जय भूधर भूमिप ।
जय योगेश योगज्ञ जय योगप्रवर्त्तक ॥ ६॥

जय योगप्रवर्तक जय धर्मप्रवर्त्तक ।
कृतप्रिय जय जय यज्ञेश यज्ञाङ्ग जय ॥ ७॥

जय वन्दितसद्द्विज जय नारदसिद्धिद ।
जय पुण्यवतां गेह जय वैदिकभाजन ॥ ८॥

जय जय चतुर्भुज श्री जयदेव जय दैत्यभयावह ।
जय सर्वज्ञ सर्वात्मन् जय शंकर शाश्वत ॥ ९॥

जय विष्णो महादेव जय नित्यमधोक्षज ।
प्रसादं कुरु देवेश दर्शयाद्य स्वकां तनुम् ॥ १०।

अध्याय १० श्लोक १९-२८, अध्याय श्लोक संख्या ५२
श्रीनरसिंहपुराणे मार्कण्डेयचरित्रे दशमोऽध्यायः ॥ १०॥

॥ श्रीविष्णुस्तोत्रम् २ ॥

राजोवाच --
वाक्पुष्पेण कथं ब्रह्मन् ब्रह्माप्यर्चितवान् हरिम् ।
तन्मे कथय विप्रेन्द्र ब्रह्मोक्तं स्तोत्रमुत्तमम् ॥

मार्कण्डेय उवाच --
शृणु राजन् प्रवक्ष्यामि स्तोत्रं ब्रह्ममुखेरितम् ।
सर्वपापहरं पुण्यं विष्णुतुष्टिकरं परम् ॥

तमाराध्य जगन्नाथमूर्ध्वबाहुः पितामहः ।
भूत्वैकाग्रमना राजन्निदं स्तोत्रमुदीरयत् ॥

ब्रह्मोवाच --
नमामि देवं नरनाथमच्युतं नारायणं लोकगुरुं सनातनम् ।
अनादिमव्यक्तमचिन्त्यमव्ययं वेदान्तवेद्यं पुरुषोत्तमं हरिम् ॥ १॥

आनन्दरूपं परमं परात्परं चिदात्मकं ज्ञानवतां परां गतिम् ।
सर्वात्मकं सर्वगतैकरूपं ध्येयस्वरूपं प्रणमामि माधवम् ॥ २॥

भक्तप्रियं कान्तमतीव निर्मलं सुराधिपं सूरिजनैरभिष्टुतम् ।
चतुर्भुजं नीरजवर्णमीश्वरं रथाङ्गपाणिं प्रणतोऽस्मि केशवम् ॥ ३॥

गदासिशङ्खाब्जकरं श्रियः पतिं सदाशिवं शार्ङ्गधरं रविप्रभम् ।
पीताम्बरं हारविराजितोदरं नमामि विष्णुं सततं किरीटिनम् ॥ ४॥

गण्डस्थलासक्तसुरक्तकुण्डलं सुदीपिताशेषदिशं निजत्विषा ।
गन्धर्वसिद्धैरुपगीतमृग्ध्वनिं जनार्दनं भूतपतिं नमामि तम् ॥ ५॥

हत्वासुरान् पाति युगे युगे सुरान् स्वधर्मसंस्थान् भुवि संस्थितो हरिः ।
करोति सृष्टिं जगतः क्षयं यस्तं वासुदेवं प्रणतोऽस्मि केशवम् ॥ ६॥

यो मत्स्यरूपेण रसातलस्थितान् वेदान् समाहृत्य मम प्रदत्तवान् ।
निहत्य युद्धे मधुकैटभावुभौ तं वेदवेद्यं प्रणतोऽस्म्यहं सदा ॥ ७॥

देवासुरैः क्षीरसमुद्रमध्यतो न्यस्तो गिरिर्येन धृतः पुरा महान् ।
हिताय कौर्मं वपुरास्थितो यस्तं विष्णुमाद्यं प्रणतोऽस्मि भास्करम् ॥ ८॥

हत्वा हिरण्याक्षमतीव दर्पितं वराहरूपी भगवान् सनातनः ।
यो भूमिमेतां सकलां समुद्धरंस्तं वेदमूर्तिं प्रणमामि सूकरम् ॥ ९॥

कृत्वा नृसिंहं वपुरात्मनः परं हिताय लोकस्य सनातनो हरिः
जघान यस्तीक्ष्णनखैर्दितेः सुतं तं नारसिंहं पुरुषं नमामि ॥ १०॥

यो वामनोऽसौ भगवाञ्जनार्दनो बलिं बबन्ध त्रिभिरूर्जितैः पदैः ।
जगत्रयं क्रम्य ददौ पुरंदरे तदेवमाद्यं प्रणतोऽस्मि वामनम् ॥ ११॥

यः कार्तवीर्यं निजघान रोषात् त्रिस्सप्तकृत्वः क्षितिपात्मजानपि ।
तं जामदग्न्यं क्षितिभारनाशकं नतोऽस्मि विष्णुं पुरुषोत्तमं सदा ॥ १२॥

सेतुं महान्तं जलधौ बबन्ध यः सम्प्राप्य लङ्कां सगणं दशाननम् ।
जघान भृत्यै जगतां सनातनं तं रामदेवं सततं नतोऽस्मि ॥ १३॥

यथा तु वाराहनृसिंहरूपैः कृतं त्वया देव हितं सुराणाम् ।
तथाद्य भूमेः कुरु भारहानिं प्रसीद विष्णो भगवन्नमस्ते ॥ १४॥

इति ब्रह्मोक्तं विष्णुस्तोत्रम् ।

श्रीमार्कण्डेय उवाच --
इति स्तुतो जगन्नाथः श्रीधरः पद्मयोनिना ।
आविर्बभूव भगवाञ्शङ्खचक्रगदाधरः ॥

उवाच च हृषीकेशः पद्मयोनिं सुरानपि ।
स्तुत्यानयाहं संतुष्टः पितामह दिवौकसः ॥

पठतां पापनाशाय नृणां भक्तिमतामपि ।
यतोऽस्मि प्रकटीभूतो दुर्लभोऽपि हरिः सुराः ॥

सङ्क्षिप्तं अध्याये श्लोक संख्या ६८
श्रीनरसिंहपुराणे कृष्णाप्रादुर्भावो नाम त्रिपञ्चाशोऽध्यायः ॥ ५३॥

॥ सङ्कष्टनाशनविष्णुस्तोत्रम् पद्मपुराणान्तर्गतम् ॥

नारद उवाच --

पुनर्दैत्यं समायान्तं दृष्ट्वा देवाः सवासवाः ।
भयप्रकंपिताः सर्वे विष्णुं स्तोतुं प्रचक्रमुः ॥ १॥

देवा ऊचुः --

नमो मत्स्यकूर्मादिनानास्वरूपैः सदा भक्तकार्योद्यतायार्तिहन्त्रे ।
विधात्रादि सर्गस्थितिध्वंसकर्त्रे गदाशंखपद्मारिहस्ताय तेऽस्तु ॥ २॥

रमावल्लभायाऽसुराणां निहन्त्रे भुजंगारियानाय पीताम्बराय ।
मखादिक्रियापाककर्त्रे विकर्त्रे शरण्याय तस्मै नताः स्मो नताः स्मः ॥ ३॥

नमो दैत्यसन्तापितामर्त्यदुःखाचलध्वंसदंभोलये विष्णवे ते ।
भुजंगेशतल्पेशयानायाऽर्कचन्द्रद्विनेत्राय तस्मै नताः स्मो नताः स्मः ॥ ४॥

नारद उवाच ।
संकष्टनाशनं नाम स्तोत्रमेतत्पठेन्नरः ।
स कदाचिन्न संकष्टैः पीड्यते कृपया हरेः ॥ ५॥

॥ इति पद्मपुराणे पृथुनारदसंवादे
सङ्कष्टनाशनं नाम विष्णुस्तोत्रं सम्पूर्णम् ॥

॥ श्रीसमस्तपापनाशन श्रीविष्णुस्तोत्र ॥
पुष्कर उवाच
परदारपरद्रव्यजीवहिंसादिके यदा ।
प्रवर्तते नृणां चित्तं प्रायश्चित्तं स्तुतिस्तदा ॥ १॥

विष्णवे विष्णवे नित्यं विष्णवे विष्णवे नमः ।
नमामि विष्णुं चित्तस्थमहङ्कारगतिं हरिम् ॥ २॥

चित्तस्थमीशमव्यक्तमनन्तमपराजितम् ।
विष्णुमीड्यमशेषेण अनादिनिधनं विभुम् ॥ ३॥

विष्णुश्चित्तगतो यन्मेविष्णुर्बुद्धिगतश्च यत् ।
यच्चाहङ्कारगो विष्णुर्यव्दिष्णुर्मयिसंस्थितः ॥ ४॥

करोति कर्मभूतोऽसौ स्थावरस्य चरस्य च ।
तत् पापन्नाशमायातु तस्मिन्नेव हि चिन्तिते ॥ ५॥

ध्यातो हरति यत् पापं स्वप्ने दृष्टस्तु भावनात् ।
तमुपेन्द्रमहं विष्णुं प्रणतार्त्तिहरं हरिम् ॥ ६॥ var प्रणतार्तिहरं
जगत्यस्मिन्निराधारे मज्जमाने तमस्यधः ।
हस्तावलम्बनं विष्णुं प्रणमामि परात्परम् ॥ ७॥

सर्वेश्वरेश्वर विभो परमात्मन्नधोक्षज ।
हृषीकेश हृषीकेश हृषीकेश नमोऽस्तुते ॥ ८॥

नृसिंहानन्त गोविन्द भूतभावन केशव ।
दुरुक्तं दुष्कृतं ध्यातं शमयाघन्नमोऽस्तुते ॥ ९॥

यन्मया चिन्तितं दुष्टं स्वचित्तवशवर्त्तिना ।
अकार्यमहदत्युग्रन्तच्छमन्नय केशव ॥ १०॥

ब्रह्मण्यदेव गोविन्द परमार्थपरायण ।
जगन्नाथ जगद्ध्यातः पापं प्रशमयाच्युत ॥ ११॥

यथापराह्ने सायाह्ने मध्याह्ने च तथा निशि ।
कायेन मनसा वाचा कृतं पापमजानता ॥ १२॥

जानता च हृषीकेश पुण्डरीकाक्ष माधव ।

नामत्रयोच्चारणतः स्वप्ने यातु मम क्षयम् ॥ १३॥  var पापं यातु
शरीरं मे हृषीकेश पुण्डरीकाक्ष माधव ।
पापं प्रशमयाद्यत्वं वाक्कृतं मम माधव ॥ १४॥

यद्भुञ्जन्यत्स्वपंस्तिष्ठन् गच्छन् जाग्रद् यदास्थितः ।
कृतवान् पापमद्याहं कायेन मनसागिरा ॥ १५॥

यत् स्वल्पमपि यत् स्थूलं कुयोनिनिरकावहम् ।
तद्यातु प्रशमंसर्व वासुदेवानुकीर्तनात् ॥ १६॥

परं ब्रह्म परं धाम पवित्रं परमञ्च यत् ।
तस्मिन् प्रकीर्तिते विष्णौ यत् पापं तत् प्रणश्यतु ॥ १७॥

यत् प्राप्य न निवर्तन्ते गन्धस्पर्शादि वर्जितम् ।
सूरयस्तत् पदं विष्णोस्तत् सर्वं शमयत्वधम् ॥ १८॥

माहात्म्यं
पापप्रणाशनं स्तोत्रं यः पठेच्छृणुयादपि ।
शारीरैर्मानसैर्वाग्जैः कृतैः पापैः प्रमुच्यते ॥ १९॥

सर्वपापग्रहादिभ्यो यातिविष्णोः परं पदम् ।
तस्मात्पापे कृते जप्यंस्तोत्रंसर्वाघमर्दनम् ॥ २०॥

प्रायश्चित्तमघौघानां स्तोत्रं व्रतकृते वरम् ।
प्रायश्चित्तैः स्तोत्रजपैर्व्रतैर्नश्यति पातकम् ॥ २१॥

ततः कार्याणि संसिद्ध्यै तानि वै भुक्तिमुक्तये ॥ २२॥

इत्याग्नेये महापुराणे सर्वपापप्रायश्चित्त पापनाशनस्तोत्रं
नाम द्विसप्तत्यधिकशततमोऽध्यायः ॥